❀ श्रीराधासर्वेश्वरो विजयते ❀



।। श्रीनिम्बार्कमहामुनीन्द्राय नमः ।।

# श्रीनारायण-कवचम्

सम्पादक—

पं० श्री गोविन्ददास 'सन्त'

धर्मशास्त्री, पुराणतीर्थ

निम्बार्काब्द ५०७९] वि.सं.२०४० [न्योछावर )२५

प्रकाशक—
अ. भा. श्रीनिम्बार्काचार्यपीठ, निम्बार्कतीर्थ
( सलेमाबाद ) किशनगढ़-राजस्थान



मुद्रक—
श्रीनिम्बार्क मुद्रणालय, निम्बार्कतीर्थ (सलेमाबाद)



द्रव्य सहायक—
श्रीरतनलालजी राठी
संयोगिता गंज, इन्दौर [म० प्र०]

# * श्रीनारायण-कवचम् *

**अङ्गन्यास करन्यासः—**

पाठकर्त्ता सर्वप्रथम हाथ-पांव धोकर, आचमन कर, पवित्री धारण करके उत्तर दिशा की ओर मुख करके आसन बिछा कर बैठ जाय, तदनन्तर विनियोग पढ़ कर द्वादशाक्षरी, अष्टाक्षरी एवं षडक्षरी मन्त्र से न्यासादि कर पाठ प्रारम्भ करे । बीच में किसी दूसरे से बोले नहीं ।

**विनियोगः—**

ॐ अस्य श्रीनारायणकवचस्य भगवान् श्रीवेदव्यास-ऋषिरनुष्टुप्त्रिष्टुपौ छन्दसी श्रीविष्णु परमात्मा देवता ममाभीष्ट सिद्धयर्थे श्रीनारायणकवचपाठे विनियोगः ।

अङ्गन्यासः—

ॐ ॐ नमः पादयोः । ॐ नं नमः जानुनोः । ॐ मों नमः ऊर्वोः । ॐ नां नमः उदरे । ॐ रां नमः हृदि । ॐ यं नमः उरसि । ॐ णां नमः मुखे । ॐ यं नमः शिरसि ।

करन्यासः—

ॐ ॐ नमः दक्षिण तर्जन्याम् । ॐ नं नमः दक्षिण मध्यमायाम् । ॐ मों नमः दक्षिणानामिकायाम् । ॐ भं नमः दक्षिणकनिष्ठिकायाम् । ॐ गं नमः वामकनिष्ठिकायाम् । ॐ वं नमः वामानामिकायाम् । ॐ तें नमःवाममध्यमायाम् । ॐ वां नमः वामतर्जन्याम् । ॐ सुं नमः दक्षिणाङ्गुष्ठोर्ध्वपर्वणि । ॐ दें नमः दक्षिणांगुष्ठाधःपर्वणि । ॐ वां नमः वामांगुष्ठोर्ध्वपर्वणि । ॐ यं नमः वामाङ्गुष्ठाधः पर्वणि ।

**षडक्षरन्यास—**

ॐ ॐ नमः हृदये । ॐ विं नमः मूर्धनि । ॐ षं नमः भ्रुवोर्मध्ये । ॐ णं नमः शिखायाम् । ॐ वें नमः नेत्रयोः । ॐ नं नमः सर्वसन्धिषु ।

**दिग्बन्धः—**

ॐ मः अस्त्राय फट् प्राच्याम् । ॐ मः अस्त्राय फट् आग्नेयाम् । ॐ मः अस्त्राय फट् दक्षिणस्याम् । ॐ मः अस्त्राय फट् नैऋत्ये । ॐ मः अस्त्राय फट् प्रतीच्याम् । ॐ मः अस्त्राय फट् वायव्ये । ॐ मः अस्त्राय फट् उदीच्याम् । ॐ मः अस्त्राय फट् ऐशान्याम् । ॐ मः अस्त्राय फट् ऊर्ध्वायाम् । ॐ मः अस्त्राय फट् अधरायाम् ।

श्रीनारायण कवचम्—

राजोवाच

यया गुप्तः सहस्राक्षः सवाहान् रिपुसैनिकान् ।
क्रीडन्निव विनिर्जित्य त्रिलोक्या बुभुजे श्रियम् ॥१॥

भगवंस्तन्ममाख्याहि वर्म नारायणात्मकम् ।
यथाऽऽततायिनः शत्रून् येन गुप्तोऽजयन्मृधे ॥२॥

श्री शुक उवाच

वृतः पुरोहितस्त्वाष्ट्रो महेन्द्रायानुपृच्छते ।
नारायणाख्यं वर्माह तदिहैकमनाः शृणु ॥३॥

विश्वरूप उवाच

धौताङ्घ्रिपाणिराचम्य सपवित्र उदङ्मुखः ।
कृतस्वाङ्गकरन्यासो मन्त्राभ्यां वाग्यतः शुचिः ॥४॥

नारायणमयं वर्म संनह्येद् भय आगते ।
पादयोर्जानुनोरूर्वोरुदरे हृद्यथोरसि ॥५॥
मुखे शिरस्यानुपूर्व्यादोंकारादीनि विन्यसेत् ।
ॐ नमो नारायणायेति विपर्ययमथापि वा ॥६॥
करन्यासं ततः कुर्याद् द्वादशाक्षरविद्यया ।
प्रणवादियकारान्तमङ्गुल्यङ्गुष्ठपर्वसु ॥७॥
न्यसेद्धृदय ओङ्कारं विकारमनु मूर्धनि
षकारं तु भ्रुवोर्मध्ये णकारं शिखया दिशेत् ॥८॥
वेकारं नेत्रयोर्युञ्ज्यान्नकारं सर्वसंधिषु ।
मकारमस्त्रमुद्दिश्य मन्त्रमूर्तिर्भवेद् बुधः ॥९॥

सविसर्गं फडन्तं तत् सर्वदिक्षु विनिर्दिशेत् ।
ॐ विष्णवे नम इति ॥१०॥
आत्मानं परमं ध्यायेद् ध्येयं षट्शक्तिभिर्युतम् ।
विद्यातेजस्तपोमूर्तिमिमं मन्त्रमुदाहरेत् ॥११॥
ॐ हरिर्विदध्यान्मम सर्वरक्षां
न्यस्ताङ्घ्रिपद्मः पतगेन्द्र पृष्ठे ॥
दरारिचर्मासिगदेषुचाप-
पाशान् दधानोऽष्टगुणोऽष्टबाहुः ॥१२॥
जलेषु मां रक्षतु मत्स्यमूर्ति-
र्यादोगणेभ्यो वरुणस्य पाशात् ।

स्थलेषु मायावटुवामनोऽव्यात्
त्रिविक्रमः खेऽवतु विश्वरूपः ॥१३॥
दुर्गेष्वटव्याजिमुखादिषु प्रभुः
पायान्नृसिंहोऽसुरयूथपारिः ।
विमुञ्चतो यस्य महाट्टहासं
दिशो विनेदुर्न्यपतंश्च गर्भाः ॥१४॥
रक्षत्वसौ माध्वनि यज्ञकल्पः
स्वदंष्ट्रयोन्नीतधरो वराहः ।
रामोऽद्रिकूटेष्वथ विप्रवासे
सलक्ष्मणोऽव्याद् भरताग्रजोऽस्मान् ॥१५॥

यज्ञश्च लोकादवताञ्जनान्ताद्
बलो गणात् क्रोधवशादहीन्द्रः ॥१८॥
द्वैपायनो भगवानप्रबोधाद्
बुद्धस्तु पाखण्डगणात् प्रमादात् ।
कल्किः कलेः कालमलात् प्रपातु
धर्मावनायोरुकृतावतारः ॥१९॥
मां केशवो गदया प्रातरव्याद्
गोविन्द आसङ्गवमात्तवेणुः ।
नारायणः प्राह्ण उदात्तशक्ति--
र्मध्यंदिने विष्णुररीन्द्रपाणिः ॥२०॥

देवोऽपराह्णे मधुहोग्रधन्वा
सायं त्रिधामावतु माधवो माम् ।
दोषे हृषीकेश उतार्धरात्रे
निशीथ एकोऽवतु पद्मनाभः ॥२१॥
श्रीवत्सधामापररात्र ईशः
प्रत्यूष ईशोऽसिधरो जनार्दनः ।
दामोदरोऽव्यादनुसंध्यं प्रभाते
विश्वेश्वरो भगवान् कालमूर्तिः ॥२२॥
चक्रं युगान्तानलतिग्मनेमि
भ्रमत् समन्ताद् भगवत्प्रयुक्तम् ।

दंदग्धि दंदग्ध्यरिसैन्यमाशु

कक्षं यथा वातसखो हुताशः ॥२३॥

गदेऽशनिस्पर्शनविस्फुलिङ्गे

निष्पिण्ढि निष्पिढ्यजितप्रियासि ।

कूष्माण्डवैनायकयक्षरक्षो--

भूतग्रहांश्चूर्णय चूर्णयारीन् ॥२४॥

त्वं यातुधानप्रमथप्रेतमातृ--

पिशाचविप्रग्रहघोरदृष्टीन् ।

दरेन्द्र विद्रावय कृष्णपूरितो

भीमस्वनोऽरेर्हृदयानि कम्पयन् ॥२५॥

त्वं तिग्मधारासिवरारिसैन्य--
मीशप्रयुक्तो मम छिन्धि छिन्धि ।
चक्षूंषि चर्मञ्छतचन्द्र छादय
द्विषामघोनां हर पापचक्षुषाम् ॥२६॥
यन्नो भयं ग्रहेभ्योऽभूत् केतुभ्यो नृभ्य एव च ।
सरीसृपेभ्यो दंष्ट्रिभ्यो भूतेभ्योंऽहोभ्य एव वा ॥२७॥
सर्वाण्येतानि भगवन्नामरूपास्त्रकीर्तनात् ।
प्रयान्तु संक्षयं सद्यो ये नः श्रेयः प्रतीपकाः ॥२८॥
गरुडो भगवान् स्तोत्रस्तोभश्छन्दोमयः प्रभुः ।
रक्षत्वशेषकृच्छ्रेभ्यो विश्वक्सेनः स्वनामभिः ॥२९॥

सर्वापद्भ्यो हरेर्नामरूपयानायुधानि नः ।
बुद्धीन्द्रियमनःप्राणान् पान्तु पार्षदभूषणाः ॥३०॥
यथा हि भगवानेव वस्तुतः सदसच्च यत् ।
सत्येनानेन नः सर्वे यान्तु नाशमुपद्रवाः ॥३१॥
यथैकात्म्यानुभावानां विकल्परहितः स्वयम् ।
भूषणायुधलिङ्गाख्या धत्ते शक्तिः स्वमायया ॥३२॥
तेनैव सत्यमानेन सर्वज्ञो भगवान् हरिः ।
पातु सर्वैः स्वरूपैर्नः सदा सर्वत्र सर्वगः ॥३३॥
विदिक्षु दिक्षूर्ध्वमधः समन्ता-
दन्तर्बहिर्भगवान् नारसिंहः ।

प्रहापयँल्लोकभयं स्वनेन
स्वतेजसा ग्रस्तसमस्ततेजाः ॥३४॥
मघवन्निदमाख्यातं वर्म नारायणात्मकम् ।
विजेष्यस्यञ्जसा येन दंशितोऽसुरयूथपान् ॥३५॥
एतद् धारयमाणस्तु यं यं पश्यति चक्षुषा ।
पदा वा संस्पृशेत् सद्यः साध्वसात् स विमुच्यते ॥३६॥
न कुतश्चिद् भयं तस्य विद्यां धारयतो भवेत् ।
राजदस्युग्रहादिभ्यो व्याघ्रादिभ्यश्च कर्हिचित् ॥३७॥
इमां विद्यां पुरा कश्चित् कौशिको धारयन् द्विजः ।
योगधारणया स्वाङ्गं जहौ स मरुधन्वनि ॥३८॥

तस्योपरि विमानेन गन्धर्वपतिरेकदा ।
ययौ चित्ररथः स्त्रीभिर्वृतो यत्र द्विजक्षयः ॥३९॥

गगनान्न्यपतत् सद्यः सविमानो ह्यवाक्शिराः ।
स वालखिल्यवचनादस्थीन्यादाय विस्मितः ।
प्रास्य प्राचीसरस्वत्यां स्नात्वा धाम स्वमन्वगात् ॥४०॥

श्रीशुक उवाच

य इदं शृणुयात् काले यो धारयति चादृतः ।
तं नमस्यन्ति भूतानि मुच्यते सर्वतो भयात् ॥४१॥

एतां विद्यामधिगतो विश्वरूपाच्छतक्रतुः ।
त्रैलोक्यलक्ष्मीं बुभुजे विनिर्जित्य मृधेऽसुरान् ॥४२॥

।। श्रीनारायणकवचम् सम्पूर्णम् ।।



पुस्तक प्राप्ति स्थान :—

१- अ. भा. श्रीनिम्बार्काचार्यपीठ,
निम्बार्कतीर्थ-सलेमाबाद (अजमेर) राज०

२. श्री श्रीजी मन्दिर
प्रताप बाजार, वृन्दावन ( उ० प्र० )

३. श्री निम्बार्क कोट
पृथ्वीराज मार्ग, अजमेर (राज०)

४. श्रीरतनलालजी राठी
संयोगिता गंज, इन्दौर [म० प्र०]